भगवान श्री आद्य शंकराचार्यकृत

# ।। आत्मबोध।।

1. तपोभिः क्षीणपापानां शान्तानां वीतरागिणाम्।
मुमुक्षूणामपेक्ष्योऽयं आत्मबोधो विधीयते।।

2. बोधोऽन्यसाधनेभ्यो हि साक्षान्मोक्षैकसाधनम्।
पाकस्य वह्निवज्ज्ञानं विना मोक्षो न सिध्यति।।

3. अविरोधितया कर्म नाऽविद्यां विनिवर्तयेत्।
विद्याविद्यां निहन्त्येव तेजस्तिमिरसंघवत्।।

4. परिच्छिन्न इवाज्ञानात् तन्नाशे सति केवलः।
स्वयं प्रकाशते ह्यात्मा मेघापायेंऽशुमानिव।।

5. अज्ञानकलुषं जीवं ज्ञानाभ्यासाद्विनिर्मलम्
कृत्वा ज्ञानं स्वयं नश्येत् जलं कतकरेणुवत्।।

6. संसारः स्वप्नतुल्यो हि रागद्वेषादिसंकुलः।
स्वकाले सत्यवद्भाति प्रबोधे सत्यसद्भवेत्।।

7. तावत्सत्यं जगद्भाति शुक्तिकारजतं यथा।
यावन्न ज्ञायते ब्रह्म सर्वाधिष्ठानमद्वयम्।।

8. उपादानेऽखिलाधारे जगन्ति परमेश्वरे।
सर्गस्थितिलयान्यान्ति बुद्बुदानीव वारिणि।।

9. सच्चिदात्मन्यनुस्यूते नित्ये विष्णौ प्रकल्पिताः।
व्यक्तयो विविधास्सर्वा हाटके कटकादिवत्।।

10. यथाकाशो हृषीकेशो नानोपाधिगतो विभुः।
तद्भेदाद् भिन्नवद्भाति तन्नाशे केवलो भवेत्।।

11. नानोपाधिवशादेव जातिवर्णाश्रमादयः।
आत्मन्यारोपितास्तोये रसवर्णादिभेदवत्।।

12. पंचीकृतमहाभूतसम्भवं कर्मसंचितम्।
शरीरं सुखदुःखानां भोगायतनुच्यते।।

13. पंचप्राणमनोबुद्धि दशेन्द्रियसमन्वितम्।
अपंचीकृतभूतोत्थं सूक्ष्मांगं भोगसाधनम्।।

14. अनाद्यविद्यानिर्वाच्या कारणोपाधिरुच्यते।
उपाधित्रितयादन्यम् आत्मानमवधारयेत्।।

15. पंचकोशादियोगेन तत्तन्मय इव स्थितः।
शुद्धात्मा नीलवस्त्रादि योगेन स्फटिको यथा।।

16. वपुस्तुषादिभिः कोशैः युक्तं युक्त्यावघाततः।
आत्मानमन्तरं शुद्धं विविच्यात्तण्डुलं यथा।।

17. सदा सर्वगतोऽप्यात्मा न सर्वत्रावभासते।
बुद्धावेवावभासेत स्वच्छेषु प्रतिबिम्बवत्।।

18. देहेन्द्रियमनोबुद्धि प्रकृतिभ्यो विलक्षणम्।
तद्वृत्तिसाक्षिणं विद्यात् आत्मानं राजवत्सदा।।

19. व्यापृतेष्विन्द्रियेष्वात्मा व्यापारीवाविवेकिनाम्।
दृश्यतेऽभ्रेषु धावत्सु धावन्निव यथा शशी।।

20. आत्मचैतन्यमाश्रित्य देहेन्द्रियमनोधियः।
स्वक्रियार्थेषु वर्तन्ते सूर्यालोकं यथा जनाः।।

21. देहेन्द्रियगुणान् कर्माणि अमले सच्चिदात्मनि।
अध्यस्यन्त्यविवेकेन गगने नीलतादिवत्।।

22. अज्ञानान्मानसोपाधेः कर्तृत्वादीनि चात्मनि।
कल्प्यन्तेऽम्बुगते चन्द्रे चलनादि यथाम्भसः।।

23. रागेच्छासुखदुःखादि बुद्धौ सत्यां प्रवर्तते।
सुषुप्तौ नास्ति तन्नाशे तस्माद्बुद्धेस्तु नात्मनः।।

24. प्रकाशोऽर्कस्य तोयस्य शैत्यमग्नेर्यथोष्णता।
स्वभावः सच्चिदानन्द नित्यनिर्मलतात्मनः।।

25. आत्मनः सच्चिदंशश्च बुद्धेर्वृत्तिरिति द्वयम्।
संयोज्य चाविवेकेन जानामीति प्रवर्तते।।

26. आत्मनो विक्रिया नास्ति बुद्धेर्बोधो न जात्विति।
जीवः सर्वमलं ज्ञात्वा ज्ञाता द्रष्टेति मुह्यति।।

27. रज्जुसर्पवदात्मानं जीवो ज्ञात्वा भयं वहेत्।
नाहं जीवः परात्मेति ज्ञातश्चेन्निर्भयो भवेत्।।

28. आत्मावभासयत्येको बुद्ध्यादीनीन्द्रियाण्यपि।
दीपो घटादिवत्स्वात्मा जडैस्तैर्नावभास्यते।।

29. स्वबोधे नान्यबोधेच्छा बोधरूपतयात्मनः।
न दीपस्यान्यदीपेच्छा यथा स्वात्मप्रकाशने।।

30. निषिध्य निखिलोपाधीन् नेति नेतीतिवाक्यतः।
विद्यादैक्यं महावाक्यैः जीवात्मपरमात्मनोः।।

31. आविद्यकं शरीरादि दृश्यं बुद्बुदवत्क्षरम्।
एतद्विलक्षणं विद्याद् अहं ब्रह्मेति निर्मलम्।।

32. देहान्यत्वान्न मे जन्म जराकार्श्यलयादयः।
शब्दादिविषयैः संगो निरीन्द्रियतया न च।।

33. अमनस्त्वान्न मे दुःख रागद्वेष भयादयः।
अप्राणो ह्यमनाः शुभ्रः इत्यादि श्रुतिशासनात्।।

34. निर्गुणो निष्क्रियो नित्यो निर्विकल्पो निरंजन।
निर्विकारो निराकारो नित्यमुक्तोऽसि निर्मलः।।

35. अहमाकाशवत्सर्वं बहिरन्तर्गतोऽच्युतः।
सदा सर्वसम शुद्धो निस्संगो निर्मलोऽचलः।।

36. नित्यशुद्धविमुक्तैकम् अखण्डानन्दमद्वयम्।
सत्यं ज्ञानमनन्तं यत् परं ब्रह्माहमेव तत्।।

37. एवं निरन्तराभ्यस्ता ब्रह्मैवास्मीतिवासना।
हरत्यविद्याविक्षेपान् रोगानिव रसायनम्।।

38. विविक्तदेश आसीनो विरागो विजितेन्द्रियः।
भावयेदेकमात्मानं तमनन्तमनन्यधीः।।

39. आत्मन्येवाखिं दृश्यं प्रविलाप्य धिया सुधीः।
भावयेकेमात्मानं निर्मलाकाशवत्सदा।।

40. रूपवर्णादिकं सर्वं विहाय परमार्थवित्।
परिपूर्णचिदानन्द स्वरूपेणावतिष्ठते।।

41. ज्ञातृज्ञानज्ञेयभेदः परे नात्मनि विद्यते।
चिदानन्दैकरूपत्वात् दीप्यते स्वयमेव हि।।

42. एवमात्मारणौ ध्यानमथने सततं कृते।
उदितावगतिर्ज्वाला सर्वाज्ञानेन्धनं दहेत्।।

43. अरुणेनेव बोधेन पूर्वं सन्तमसे कृते।
तत आविर्भवेदात्मा स्वयमेवांशुमानिव।।

44. आत्मा तु सततं प्राप्तोऽपि अप्राप्तवदविद्यया।
तन्नाशे प्राप्तवद्भाति स्वकण्ठाभरणं यथा।।

45. स्थाणौ पुरुषवद् भ्रान्त्या कृता ब्रह्मणि जीवता।
जीवस्य तात्विके रूपे तस्मिन्दृष्टे निवर्तते।।

46. तत्त्वस्वरूपानुभवाद् उत्पन्ना ज्ञानमंजसा।
अहं ममेति चाज्ञानं बाधते दिग्भ्रमादिवत्।।

47. सम्यक् विज्ञानवान योगी स्वात्मन्येवाखिलं जगत्।
एकं च सर्वमात्मानं ईक्षते ज्ञानचक्षुषा।।

48. आत्मैवेदं जगत्सर्वं आत्मनोन्यन्न विद्यते।
मृदौ यद्वद् घटादीनि स्वात्मानं सर्वमीक्षते।।

49. जीवन्मुक्तस्तु तद्विद्वान् पूर्वोपाधिगुणांस्त्यजेत्।
सच्चिदानन्दरूपत्वात् भवेद्भ्रमरकीटवत्।।

50. तीर्त्वा मोहार्णवं हत्वा रागद्वेषादिराक्षसान्।
योगी शान्तसमायुक्त आत्मा रामो विराजते।।

51. बाह्यानित्यसुखासक्तिं हित्वात्मसुखनिर्वृतः।
घटस्थदीपवत्स्वस्थः स्वान्तरेव प्रकाशते।।

52. उपाधिस्थोऽपि तद्धर्मैः अलिप्तो व्योमवन्मुनिः।
सर्वविन्मूढवत्तिष्ठेत् असक्तो वायुवच्चरेत।।

53. उपाधिविलयाद्विष्णौ निर्विशेषं विशेन्मुनिः।
जले जलं वियद्व्योम्नि तेजस्तेजसि वा यथा।।

54. यल्लाभान्नापरो लाभो यत्सुखान्नापरं सुखम्।
यज्ज्ञानान्नापरं ज्ञानं तद्ब्रह्मेत्यवधारयेत्।।

55. यद्दृष्ट्वा नापरं दृश्यं यद्भूत्वा न पुनर्भवः।
यज्ज्ञात्वा नापरं ज्ञेयं तद्ब्रह्मेत्यवधारयेत्।।

56. तिर्यगूर्ध्वमधः पूर्णं सच्चिदानन्दमद्वयम्।
अनन्तं नित्यमेकं यत् तद्ब्रह्मेत्यवधारयेत्।।

57. अतद्व्यावृत्तिरूपेण वेदान्तैर्लक्ष्यतेऽद्वयम्।
अखण्डानन्दमेकं यत् तद्ब्रह्मेत्यवधारयेत्।।

58. अखण्डानन्दरूपस्य तस्यानन्दलवाश्रिताः।
ब्रह्माद्यास्तारतम्येन भवन्त्यानन्दिनोऽखिलाः।।

59. तद्युक्तमखिलं वस्तु व्यवहारस्तदन्वितः।
तस्मात्सर्वगतं ब्रह्म क्षीरे सर्पिरिवाखिले।।

60. अनण्वस्थूलमह्रस्वं अदीर्घमजमव्ययम्।
अरूपगुणवर्णाख्यं तद्ब्रह्मेत्यवधारयेत्।।

61. यद्भासा भास्यतेऽर्कादि भास्यैर्यत्तु न भास्यते।
येन सर्वमिदं भाति तद्ब्रह्मेत्यवधारयेत्।।

62. स्वयमन्तर्बहिर्व्याप्य भासयन्नखिलं जगत्।
ब्रह्म प्रकाशते वह्नि प्रतप्तायसपिण्डवत्।।

63. जगद्विलक्षणं ब्रह्म ब्रह्मणोन्यन्न किंचन।
ब्रह्मान्यद्भाति चेन्मिथ्या यथा मरुमरीचिका।।

64. दृश्यते श्रूयते यद्यद् ब्रह्मणोऽन्यन्न तद्भवेत्।
तत्त्वाज्ञानाच्च तद्ब्रह्म सच्चिदानन्दमद्वयम्।।

65. सर्वगं सच्चिदात्मानं ज्ञानचक्षुर्निरीक्षते।
अज्ञानचक्षुर्नेक्षते भास्वन्तं भानुमन्धवत्।।

66. श्रवणादिभिःरुद्दीप्त ज्ञानाग्निपरितापितः।
जीवस्सर्वमलान्मुक्तः स्वर्णवद्द्योतते स्वयम्।।

67. हृदाकाशोदितो ह्यात्मा बोधभानुस्तमोऽपहृत्।
सर्वव्यापी सर्वधारी भाति भासयतेऽखिलम्।।

68. दिग्देशकालाद्यनपेक्ष्य सर्वगं शीतादिहृन्नित्यसुखं निरंजनम्।
यस्स्वात्मतीर्थं भजते विनिष्क्रियः स सर्ववित्सर्वगतोऽमृतो भवेत्।।

......................................................................

international Vedanta MIssion
www.vmission.org.in